॥ श्रीराधाकृष्णस्तोत्रम् ॥

॥ अथ ब्रह्मादिकृतं श्रीराधाकृष्णस्तोत्रं ॥

ब्रह्मोवाच ।
तव चरणसरोजे मन्मनश्चरीको
भ्रमतु सततमीश प्रेमभक्त्या सरोजे ।
भवनमरणरोगात् पाहि शान्त्यौषधेन
सुदृढसुपरिपक्वाम् देहि भक्तिं च दास्यम् ॥ १॥

शंकर उवाच ।
भवजलनिधिमग्नश्चित्तमीनो मदीयो
भ्रमति सततमस्मिन् घोरसंसारकूपे ।
विषयमतिविनिन्द्यं सृष्टिसंहाररूपम्-
अपनय तव भक्तिं देहि पादारविन्दे ॥ २॥

धर्म उवाच ।
तव निजजनसार्धं संगमो मे सदैव
भवतु विषयबन्धच्छेदने तिक्ष्णखड्गः ।
तव चरणसरोजस्थानदानैकहेतुर्-
जनुषि जनुषि भक्तिं देहि पादारविन्दे ॥ ३॥

॥ इति श्रीब्रह्मवैवर्ते ब्रह्मादिकृतम्
श्रीराधकृष्णस्तोत्रं सम्पूर्णम्॥